Digitized by Arya Samaj Foundation Chennai and eGangotri



णीत्यर्थः। ननु मृच्छकेः सत्यत्वादनेकहेतुत्वाद्विषमो दृष्टांत इत्याशंक्य पक्षांतरमाह । यद्वेति ॥ ८५ ॥

निद्राशक्तिर्यथा जीवे दुर्घटस्वप्नकारिणी ॥
ब्रह्मण्येषा स्थिता माया सृष्टिस्थित्यंतकारिणी ॥ ८६॥

दृष्टांतं विशदयति। निद्रेति। दार्ष्टांतिकमाह ।ब्रह्मणीति ॥ ८६॥

स्वप्ने वियद्गतिं पश्येत्स्वमूर्द्धच्छेदनं यथा ॥
मुहूर्ते वत्सरौघं च मृतपुत्रादिकं पुनः ॥ ८७॥

दुर्घटकारित्वमेव दर्शयति। स्वप्न इति ॥ ८७ ॥

इदं युक्तमिदं नेति व्यवस्था तत्र दुर्लभा ॥
यथा यथेक्ष्यते यद्यत्तत्तद्युक्तं तथा तथा ॥ ८८ ॥

स्वप्नस्य दुर्घटत्वे हेतुमाह । इदमिति ॥ ८८ ॥

ईदृशो महिमा दृष्टो निद्राशक्तेर्यदा तदा ॥
मायाशक्तेरचिंत्योयं महिमेति किमद्भुतम् ॥ ८९ ॥

उक्तमर्थं कैमुतिकन्यायेन स्पष्टयति । ईदृश इति ॥ ८९ ॥

शयाने पुरुषे निद्रा स्वप्नं बहुविधं सृजेत् ॥
ब्रह्मण्येवं निर्विकारे विकारान्कल्पयत्यसौ ॥ ९० ॥

अप्रयतमानब्रह्मनिष्ठायाः मायायाः जगद्धेतुत्वे दृष्टांतमाह ।शयान इति ॥ ९० ॥

खानिलाग्निजलोर्व्यंडलोकप्राणिशिलादिकाः ॥
विकाराः प्राणिधीष्वंतश्चिच्छाया प्रतिबिंबिता ॥९१ ॥

मायया सृष्टान्पदार्थान् दर्शयति । खानिलेति । ननु पांचभौतिकत्वेन साम्येपि केषांचिच्चेतनत्वं केषांचिज्जडत्वं कुत इत्याशं-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्याह ।प्राणीति। प्राणिशरीरेष्वंतःकरणेषु चैतन्यप्रतिबिंबनाच्चेतनत्वमितरत्र तदभावाज्जडत्वमित्यर्थः ॥ ९१ ॥

चेतनाचेतनेष्वेषु सच्चिदानंदलक्षणम् ॥
समानं ब्रह्मभिद्येते नामरूपे पृथक् पृथक् ॥ ९२ ॥

ननु चेतनाचेतनविभागश्चिद्रूपब्रह्मकृत एव किं न स्यादित्याशंक्य ब्रम्हणः सर्वोपादानत्वेन सर्वत्र समत्वान्नैवमित्याह । चेतनेति ॥ ९२ ॥

ब्रह्मण्येते नामरूपे पटे चित्रमिव स्थिते ॥
उपेक्ष्य नामरूपे द्वे सच्चिदानंदधीर्भवेत् ॥ ९३ ॥

ब्रह्मणश्चिज्जडसाधारणत्वे हेतुमाह ।ब्रह्मणीति । ब्रह्मणः सर्वकल्पनाधारत्वात्सर्वगतत्वमित्यर्थः । तत्कथमवगम्यत इत्याशंकायां कल्पितनामरूपत्यागेधिष्ठानं ब्रह्मावगम्यत इत्याह।उपेक्ष्येति॥९३

जलस्थेऽधोमुखे स्वस्य देहे दृष्टेप्युपेक्ष्य तम् ॥
तीरस्थ एव देहे स्वे तात्पर्यं स्याद्यथा तथा ॥ ९४ ॥

उक्तार्थे दृष्टांतमाह । जलस्थ इति। नीरेऽधोमुखे देहे परिदृश्यमानेऽपि तत्रादरं परित्यज्य तीरस्थे स्वदेहे तद्विपरीते ममत्वबुद्धिर्यथा तथेत्यर्थः ॥ ९४ ॥

सहस्रशो मनोराज्ये वर्तमाने सदैव तत् ॥
सर्वैरुपेक्ष्यते यद्वदुपेक्षा नामरूपयोः ॥ ९५ ॥

इदानीं सर्वजनप्रसिद्धं दृष्टांतांतरमाह । सहस्रश इति । उपेक्षा कर्तव्येति शेषः ॥ ९५ ॥

क्षणे क्षणे मनोराज्यं भवत्येवान्यथाऽन्यथा ॥
गतं गतं पुनर्नास्ति व्यवहारो बहिस्तथा ॥ ९६ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रपंचवैचित्र्ये दृष्टांतमाह ।क्षण इति। दार्ष्टांतिकमाह। व्यवहार इति ॥ ९६ ॥

न बाल्यं यौवने लभ्यं यौवनं स्थाविरे तथा ॥
मृतः पिता पुनर्नास्ति नायात्येव गतं दिनम् ॥ ९७ ॥

तदेव विवृणोति । न बाल्यमिति ॥ ९७ ॥

मनोराज्याद्विशेषः कः क्षणध्वंसिनि लौकिके ॥
अतोस्मिन् भासमानेपि तत्सत्यत्वधियं त्यजेत् ॥९८॥

द्वैतक्षणिकत्वमुपसंहरति ।मनोराज्यादिति।क्षणिकत्वसाधने प्रयोजनमाह । अत इति ॥ ९८ ॥

उपेक्षिते लौकिके धीर्निर्विघ्ना ब्रह्मचिंतने ॥
नटवत्कृत्रिमास्थायां निर्वहत्येव लौकिकम् ॥ ९९

ननु लौकिकोपेक्षायां को लाभ इत्याशंक्य ब्रह्मणि धीः स्थिरा भवतीत्याह । उपेक्षित इति। तर्हि ज्ञानिनो व्यवहारः कथमित्याशंक्याह । नटवदिति ॥ ९९ ॥

प्रवहत्यपि नीरेधः स्थिरा प्रौढशिला यथा ॥
नामरूपान्यथात्वेपि कूटस्थं ब्रह्म नान्यथा ॥१०० ॥

ननु ज्ञानिनो व्यवहाराभ्युपगमे विकारित्वं प्रसज्येतेत्याशंक्य बुद्धौ व्यवहारवत्यामपि तत्साक्ष्यात्मा निर्विकार इति सदृष्टांतमाह । प्रवहतीति ।उदके उपरि प्रवहत्यपि अधःस्थिता प्रौढा शिला यथा न चलति तथा एवं बुद्धौ संसरत्यामपि न ज्ञानी संसरतीत्यर्थः ॥ १०० ॥

निश्छिद्रे दर्पणे भाति वस्तुगर्भं बृहद्वियत् ॥
सच्चिद्घने तथा नाना जगद्गर्भमिदं वियत् ॥ १०१ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नन्वखंडे ब्रह्मणि तद्विलक्षणस्य जगतः कथमवभासनमित्याशंक्य निश्छिद्रे दर्पणे सावकाशवस्तुनो यथा भानं तद्वदित्याह। निश्छिद्र इति ॥ १०१ ॥

अदृष्ट्वा दर्पणं नैव तदंतस्थेक्षणं तथा ॥
अमत्वा सच्चिदानंदनामरूपमतिः कुतः ॥ १०२ ॥

नन्वद्वये ब्रह्मणि कथं जगत्प्रतीतिरित्याशंक्य सच्चिदानंदप्रतीतिपुरःसरमेव जगत्प्रतीतिरिति सदृष्टांतमाह।अदृष्ट्वेति॥१०२

प्रथमं सच्चिदानंदे भासमानेऽथतावता ॥
बुद्धिं नियम्य नैवोर्ध्वं धारयेन्नामरूपयोः ॥ १०३ ॥

ननु नामरूपयोरपि भासमानत्वात्कथं निर्विषयब्रह्मप्रतीतिरित्याशंक्य तद्बुद्ध्युपायमाह। प्रथममिति। सच्चिदानंदे ब्रह्मणि कल्पितनामरूपात्मके प्रपंचे सच्चिदानंदमात्रं बुद्ध्या गृहीत्वा नामरूपयोर्बुद्धिं न धारयेत् ॥ १०३ ॥

एवं च निर्जगद्ब्रह्म सच्चिदानंदलक्षणम् ॥
अद्वैतानंद एतस्मिन्विश्राम्यंतु जनाश्चिरम् ॥ १०४॥

फलितमाह।एवमिति।एवं च सति निर्जगद्ब्रह्म सच्चिदानंदलक्षणं भवतीत्यर्थः ॥ १०४ ॥

ब्रह्मानंदाभिधे ग्रंथे तृतीयोध्याय ईरितः ॥
अद्वैतानंद एव स्याज्जगन्मिथ्यात्वचिंतया ॥ १०५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्विद्यारण्यमुनिविरचिते ब्रह्मानंदे अद्वैतानंदो नाम तृतीयोऽध्यायः॥३॥

इदानीमध्यायार्थमुपसंहरति। ब्रह्मानंदेति ॥ १०५॥

इति श्रीमत्परमहंसप० विद्यारण्य० श्रीरामकृष्णाख्यविदुषा विरचिता ब्रह्मानंदेअद्वैतानंदव्याख्या समाप्ता ॥ १३ ॥

---



CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

॥ श्रीः ॥

# पंचदशी ।

## ब्रह्मानन्दे विद्यानन्दः प्रकरणम् १४

॥ श्रीगणेशाय नमः ॥

योगेनात्मविवेकेन द्वैतमिथ्यात्वचिंतया ॥
ब्रह्मानंदं पश्यतोथ विद्यानंदो निरूप्यते ॥ १ ॥

श्रीगणेशाय नमः ॥ ॥ अथ विद्यानंदव्याख्या ॥ इदानीं वृत्तवर्तिष्यमाणयोर्ग्रंथयोः संबंधमाह । योगेनेति ॥ १ ॥

विषयानंदवद्विद्यानंदो धीवृत्तिरूपकः ॥
दुःखाभावादिरूपेण प्रोक्त एष चतुर्विधः ॥ २ ॥

विद्यानंदस्वरूपमाह । विषयेति । तस्यावांतरभेदमाह।दुःखाभावेति ॥ २ ॥

दुःखाभावश्च कामाप्तिः कृतकृत्योऽहमित्यसौ ॥
प्राप्तप्राप्योऽहमित्येव चातुर्विध्यमुदाहृतम् ॥ ३ ॥

चातुर्विध्यमेव दर्शयति । दुःखाभावश्चेति ॥ ३ ॥

ऐहिकं चामुष्मिकंचेत्येवं दुःखं द्विधेरितम् ॥
निवृत्तिमैहिकस्याह बृहदारण्यकं वचः ॥ ४ ॥

निवर्तनीयं दुःखं विभजते ।ऐहिकमिति। ऐहिकस्य निवृत्तिर्बृहदारण्यकवाक्येनोच्यत इत्याह । निवृत्तिमिति ॥ ४ ॥

आत्मानं चेद्विजानीयादहमस्मीति पूरुषः ॥
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ ५ ॥

तच्छ्रुतिवाक्यं पठति । आत्मानमिति ॥ ५ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जीवात्मा परमात्मा चेत्यात्मा द्विविध ईरितः ॥
चित्तादात्म्यात्त्रिभिर्देहैर्जीवः सन् भोक्तृतां व्रजेत् ॥ ६ ॥

आत्मनि शोकसंबंधं दर्शयितुं तद्भेदमाह। जीवात्मेति। आत्मनो जीवत्वे निमित्तमाह । चित्तादात्म्यादिति । चैतन्यस्य स्थूलसूक्ष्मकारणरूपैस्त्रिभिः शरीरैस्तादात्म्यभ्रमे सति चितो भोक्तृत्वं भवति स भोक्ता जीव इत्युच्यते ॥ ६ ॥

परात्मा सच्चिदानंदस्तादात्म्यं नामरूपयोः ॥
गत्वा भोग्यत्वमापन्नस्तद्विवेके तु नोभयम् ॥ ७ ॥

इदानीं परमात्मनः स्वरूपमाह । परात्मेति । तस्य भोग्यरूपत्वापत्तिप्रकारमाह । तादात्म्यमिति । नामरूपकल्पनाधिष्ठानत्वेन तत्तादात्म्यं प्राप्य भोग्यत्वमश्नुत इत्यर्थः । भोक्तृत्वाद्यभावे कारणमाह । तद्विवेक इति । ताभ्यां शरीरत्रयजगद्भ्यां विवेके भेदज्ञाने जाते सति नोभयं भोक्तृभोग्यरूपं नास्तीत्यर्थः ॥ ७ ॥

भोग्यमिच्छन् भोक्तुरर्थे शरीरमनुसंज्वरेत् ॥
ज्वरास्त्रिषु शरीरेषु स्थिता न त्वात्मनो ज्वराः ॥ ८ ॥

उक्तमर्थं विवृणोति । भोग्यमिति ॥ ८ ॥

व्याधयो धातुवैषम्ये स्थूलदेहे स्थिता ज्वराः ॥
कामक्रोधादयः सूक्ष्मे द्वयोर्बीजं तु कारणे ॥ ९ ॥

कस्मिन् शरीरे को ज्वर इत्याशंक्य स्थूलदेहे विद्यमानान् ज्वरान् दर्शयति। व्याधय इति । लिंगदेहकारणदेहगतान् ज्वरानाह। कामेति ॥ ९ ॥

अद्वैतानंदमार्गेण परात्मनि विवेचिते ॥
अपश्यन्वास्तवं भोग्यं किं नामेच्छेत्परात्मवित् ॥ १० ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इदानीमुदाहृतश्रुतितात्पर्यकथनव्याजेन पूर्वोक्तमेवार्थं विशदयति । अद्वैतेति । तृतीयाध्यायोक्तप्रकारेण मायाकार्यनामरूपाभ्यां सच्चिदानंदे परमात्मनि विवेचिते भेदेन ज्ञाते सति सर्वं प्रपंचं मिथ्येति जानन् किं नाम भोग्यमिच्छति ॥ १० ॥

आत्मानंदोक्तरीत्यास्मिन् जिवात्मन्यवधारिते ॥
भोक्ता नैवास्ति कोप्यत्र शरीरे तु ज्वरः कुतः ॥ ११ ॥

ततः पूर्वाध्यायोक्तरीत्या जीवात्मस्वरूपे असंगकूटस्थचैतन्यरूपे निश्चिते सति कामयितुरभावाज्ज्वरादिसंबंधो नास्तीत्याह । आत्मानंदेति ॥ ११ ॥

पुण्यपापद्वये चिंता दुःखमामुष्मिकं भवेत् ॥
प्रथमाध्याय एवोक्तं चिंता नैनं तपेदिति ॥ १२ ॥

इदानीमामुष्मिकं ज्वरं दर्शयति।पुण्येति। तस्याभावः प्रथमाध्याये निरूपित इत्याह । प्रथमेति ॥ १२ ॥

यथा पुष्करपर्णेऽस्मिन्नपामश्लेषणं तथा ॥
वेदनादूर्ध्वमागामिकर्मणोऽश्लेषणं बुधे ॥ १३ ॥

ननु ज्ञानिन आरब्धकर्मविषया चिंता मा भूदागामिकर्मविषया चिंता भवत्येवेत्याशंक्य 'तद्यथा पुष्करपर्ण' इत्यादिश्रुत्या ज्ञानिने आगामिकर्मसंबंधनिराकरणात्तद्विषयापि चिंता नास्तीत्याह । यथेति ॥ १३ ॥

इषीकातृणतूलस्य वन्हिदाहः क्षणाद्यथा ॥
तथा संचितकर्मास्य दग्धं भवति वेदनात् ॥ १४ ॥

'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयंत' इति श्रुत्यवष्टंभेन संचितकर्मविषयापि चिंता ज्ञानिनो नास्तीत्याह । इषीकेति ॥ १४ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ १५ ॥

उक्तार्थे भगवद्वाक्यमपि प्रमाणयति । यथैधांसीति ॥ १५ ॥

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ॥
हत्वापि स इमाँल्लोकान्न हंति न निबध्यते ॥ १६ ॥

यस्य नाहमिति ॥ १६ ॥

मातापित्रोर्वधस्तेयं भ्रूणहत्यान्यदीदृशम् ॥
न मुक्तिं नाशयेत्पापं मुखकांतिर्न नश्यति ॥ १७ ॥

अस्मिन्नेवार्थे न 'मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया नास्य पापं चन चक्रुषो मुखान्नीलं वेती'तिकौषीतकीश्रुतिवाक्यमर्थतः पठति । मातापित्रोरिति । चनेत्येकं पदं नीलमितिकांतिरित्यर्थः ॥ १७ ॥

दुःखाभाववदेवास्य सर्वकामाप्तिरीरिता ॥
सर्वान् कामानसावाप्त्वा ह्यमृतो भवदित्यतः ॥ १८ ॥

उक्तचातुर्विध्यमध्ये द्वितीयप्रकारमाह।दुःखेति।ईरिता श्रुत्येति शेषः।अस्मिन्नर्थे ऐतरेयश्रुतिवाक्यमर्थतः पठति ।सर्वानिति॥१८॥

जक्षन्क्रीडन्रतिं प्राप्तः स्त्रीभिर्यानैस्तथेतरैः ॥
शरीरं न स्मरेत्प्राणः कर्मणा जीवयेदमुम् ॥ १९ ॥

'जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीर'मिति छांदोग्यश्रुतिवाक्यमर्थतः पठति । जक्षन्निति ॥ १९ ॥

सर्वान्कामान्सहाप्नोति नान्यवज्जन्मकर्मभिः ॥
वर्तंते श्रोत्रिये भोगा युगपत्क्रमवर्जिताः ॥ २० ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्रैव तैत्तिरीयश्रुतिवाक्यमर्थतः पठति। सर्वानिति। ननु कर्मफलभोगांगीकारे जन्मापि प्रसज्येतेत्याशंक्याह। नान्यवदिति। ज्ञानेन संचितकर्मणां दग्धत्वादज्ञवज्जन्म नास्तीत्यर्थः ॥ २० ॥

युवा रूपी च विद्यावान्नीरोगो दृढचित्तवान् ॥
सैन्योपेतः सर्वपृथ्वीं वित्तपूर्णां प्रपालयन् ॥ २१ ॥

इदानीं तैत्तिरीयकबृहदारण्यकवाक्यं संक्षिप्यार्थतः पठति। युवेति ॥ २१ ॥

सर्वैर्मानुष्यकैर्भोगैः संपन्नस्तृप्तभूमिपः ॥
यमानंदमवाप्नोति ब्रह्मविच्च तमश्नुते ॥ २२ ॥

ननु सार्वभौमादिहिरण्यगर्भांतानां जीवनिष्ठानामानंदानां कथं ज्ञानिनि संभव इत्याशंक्य सर्वेषामानंदानां ज्ञानिनावगतब्रह्मांशत्वात्संभव इत्याह। सर्वैरिति ॥ २२ ॥

मर्त्यभोगे द्वयोर्नास्ति कामस्तृप्तिरतःसमा ॥
भोगान्निष्कामतैकस्य परस्यापि विवेकतः ॥ २३ ॥

ननु सार्वभौमश्रोत्रिययोर्विषयप्राप्तिसाम्याभावात्कथमानंदसाम्यमित्याशंक्य नैरपेक्ष्यसाम्यात्तृप्तिसाम्यमित्याह। मर्त्येति। तृप्तिसाम्ये हेतुमाह। भोगादिति ॥ २३ ॥

श्रोत्रियत्वाद्वेदशास्त्रैर्भोगदोषानवेक्षते ॥
राजाबृहद्रथो दोषांस्तान् गाथाभिरुदाहरत् ॥ २४ ॥

विवेकत इत्युक्तमर्थं विवृणोति। श्रोत्रियत्वादिति। विषयदोषाः कस्यां शाखायां केन निरूपिता इत्याशंक्य बृहद्रथेन मैत्रायणीयाख्यशाखायां गाथाभिरुक्ता इत्याह। राजेति ॥ २४ ॥

देहदोषांश्चित्तदोषान् भोग्यदोषाननेकशः ॥
शुना वांते पायसे नो कामस्तद्वद्विवेकिनः ॥ २५ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विवेकिनः कामानुदये दृष्टांतमाह । शुनेति ॥ २५ ॥

निष्कामत्वे समेप्यत्र राज्ञः साधनसंचये ॥
दुःखमासीद्भाविनाशादतिभीरनुवर्तते ॥ २६ ॥

सार्वभौमाच्छ्रोत्रियस्याधिक्यमाह । निष्कामत्व इति ॥ २६ ॥

नोभयं श्रोत्रियस्यातस्तदानंदोऽधिकोऽन्यतः ॥
गंधर्वानंद आशास्ति राज्ञो नास्ति विवेकिनः ॥ २७ ॥

सार्वभौमत्वं साधनसाध्यं पश्चाच्च तन्नाशभीतिश्चेति दोषद्वयत्वाच्छ्रोत्रिये तु तदुभयाभावादाधिक्यमित्यर्थः। श्रोत्रियस्याधिक्यांतरमाह । गंधर्वेति ॥ २७ ॥

अस्मिन्कल्पे मनुष्यः सन्पुण्यपाकविशेषतः ॥
गंधर्वत्वं समापन्नो मर्त्यगंधर्व उच्यते ॥ २८ ॥

इदानीं गंधर्वानंदे द्वैविध्यं दर्शयितुं श्लोकद्वयेन गंधर्वभेदमाह। अस्मिन्निति ॥ २८ ॥

पूर्वकल्पे कृतात्पुण्यात्कल्पादावेव चेद्भवेत् ॥
गंधर्वत्वं तादृशोत्र देवगंधर्व उच्यते ॥ २९ ॥

पूर्वेति ॥ २९ ॥

अग्निष्वात्तादयो लोके पितरश्चिरवासिनः ॥
कल्पादावेव देवत्वं गता आजानदेवताः ॥ ३० ॥

चिरलोकपित्रानंदप्रदर्शनाय चिरलोकपितॄनाह ।अग्निष्वात्तादय इति । देवानंदत्रैविध्यज्ञानाय देवभेदमाह। कल्पादाविति ॥ ३० ॥

अस्मिन्कल्पेश्वमेधादि कर्म कृत्वा महत्पदम् ॥
अवाप्याजानदेवैर्याः पूज्यास्ताः कर्मदेवताः ॥ ३१ ॥

अस्मिन्कल्प इति ॥ ३१ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यमाग्निमुख्या देवास्युर्ज्ञाताविंद्रबृहस्पती ॥
प्रजापतिर्विराट् प्रोक्तो ब्रह्मा सूत्रात्मनामकः॥ ३२ ॥

यमाग्नीति । इंद्रबृहस्पती प्रसिद्धावित्यर्थः ॥ ३२ ॥

सार्वभौमादिसूत्रांता उत्तरोत्तरकामिनः ॥
अवाङ्मनसगम्योयमात्मानंदस्ततः परः॥ ३३ ॥

सार्वभौमादिसूत्रांतानां श्रोत्रियात् न्यूनत्वद्योतनायाह । सार्वभौमादीति । एभ्यः सर्वेभ्योधिकमानंदमाह । अवाङ्मनसेति । यतोयमत्मानंदः अवाङ्मनसगम्यः अतः एभ्यः सर्वेभ्योधिक इत्यर्थः ॥ ३३ ॥

तैस्तैः काम्येषु सर्वेषु सुखेषु श्रोत्रियो यतः ॥
निस्पृहस्तेन सर्वेषामानंदाः संति तस्य ते ॥३४ ॥

इदानीं सर्वेषामानंदाः श्रोत्रिये विद्यंते तस्य तेषु निस्पृहत्वादित्याह । तैस्तैरिति ॥ ३४ ॥

सर्वकामाप्तिरेषोक्ता यद्वा साक्षिचिदात्मना ॥
स्वदेहवत्सर्वदेहेष्वपि भोगानवेक्षते ॥ ३५ ॥

उपपादितमर्थमुपसंहरति । सर्वेति । इदानीं पक्षांतरमाह । यद्वेति । यथा स्वदेहे आनंदाकारबुद्धिसाक्षित्वेनानंदित्वमितरेष्वपि देहेषु तद्वदित्यर्थः ॥ ३५ ॥

अज्ञस्याप्येतदस्त्येव न तु तृप्तिरबोधतः ॥
यो वेद सोश्नुते सर्वान्कामानित्यब्रवीच्छ्रुतिः ॥ ३६ ॥

ननूक्तप्रकारेणाज्ञस्यापि सर्वानंदप्राप्तिरस्तीत्याशंक्य सर्वेषु सर्वबुद्धिसाक्ष्यहमिति ज्ञानाभावान्नैवमित्याह । अज्ञस्येति । उक्तार्थे तैत्तिरीयश्रुतिं प्रमाणयति । यो वेदेति । गुहायां निहितं ब्रह्म यो वेद सोश्नुत इति योजना ॥ ३६ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यद्वा सर्वात्मतां स्वस्य साम्ना गायति सर्वदा ॥
अहमन्नं तथान्नादश्चेति सामह्यधीयते ॥ ३७ ॥

इदानीं तृतीयप्रकारमाह । यद्वेति । इमाँल्लोकान्कामान्निष्काम-रूप्यनुचरन्नित्यादिनेत्यर्थः ॥ ३७ ॥

दुःखाभावश्च कामाप्तिरुभे ह्येवं निरूपिते ॥
कृतकृत्यत्वमन्यच्च प्राप्तप्राप्यत्वमीक्षताम् ॥ ३८ ॥

अतीतग्रंथेन सिद्धमर्थं संक्षिप्याह । दुःखेति ॥ ३८ ॥

उभयं तृप्तिदीपे हि सम्यगस्माभिरीरितम् ॥
त एवात्रानुसंधेयाः श्लोका बुद्धिविशुद्धये ॥ ३९ ॥
ऐहिकामुष्मिकव्रातसिद्ध्यौ मुक्तेश्च सिद्धये ॥
बहुकृत्यं पुरास्याभूत्तत्सर्वमधुना कृतम् ॥ ४० ॥
तदेतत्कृतकृत्यत्वं प्रतियोगिपुरःसरम् ॥
अनुसंदधदेवायमेवं तृप्यति नित्यशः ॥ ४१ ॥
दुःखिनोज्ञाः संसरंतु कामं पुत्राद्यपेक्षया ॥
परमानंदपूर्णोहं संसरामि किमिच्छया ॥ ४२ ॥
अनुतिष्ठंतु कर्माणिपरलोकयियासवः ॥
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ॥ ४३ ॥
व्याचक्षतां ते शास्त्राणि वेदानध्यापयं तु वा ॥
येत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ॥ ४४ ॥
निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च ॥
द्रष्टारश्चेत्कल्पयंति किं मे स्यादन्यकल्पनात् ॥ ४५ ॥
गुंजापुंजादि दह्येत नान्यारोपितवन्हिना ॥



CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


नान्यारोपितसंसारधर्मानेवमहं भजे ॥ ४६ ॥
शृण्वंत्वज्ञाततत्वास्ते जानन् कस्माच्छृणोम्यहम् ॥
मन्यंतां संशयापन्ना न मन्येहमसंशयः ॥ ४७ ॥
विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्यये ॥
देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥ ४८ ॥
अहं मनुष्य इत्यादिव्यवहारो विनाप्यमुम् ॥
विपर्यासं चिराभ्यस्तवासनातोवकल्पते ॥ ४९ ॥
आरब्धकर्मणि क्षीणे व्यवहारो निवर्तते ॥
कर्माक्षये त्वसौ नैव शाम्येद्ध्यानसहस्त्रतः ॥ ५० ॥
विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ॥
अबाधिकां व्यवहृतिं पश्यन्ध्यायाम्यहं कुतः ॥ ५१ ॥
विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम ॥
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥ ५२ ॥
नित्यानुभवरूपस्य को मेत्रानुभवः पृथक् ॥
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव निश्चयः ॥ ५३ ॥
व्यवहारो लौकिको वा शास्त्रीयो वान्यथापि वा ॥
ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ॥ ५४ ॥
अथ वा कृतकृत्योपि लोकानुग्रहकाम्यया ॥
शास्त्रीयेणैव मार्गेण वर्तेहं का मम क्षतिः ॥ ५५ ॥
देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ॥
तारं जपतु वाक् तद्वत्पठत्वाम्नायमस्तकम् ॥ ५६ ॥
विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानंदे विलीयताम् ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



साक्ष्यहं किं चिदप्यत्र न कुर्वे नापि कारये ॥ ५७ ॥
कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः ॥
तृप्यन्नेवं स्वमनसा मन्यते सौ निरंतरम् ॥ ५८ ॥
धन्योहं धन्योहं नित्यं स्वात्मानमंजसा वेद्मि ॥
धन्योहं धन्योहं ब्रह्मानंदो विभाति मे स्पष्टम् ॥ ५९ ॥
धन्योहं धन्योहं दुःखं सांसारिकं न वीक्षेद्य ॥
धन्योहं धन्योहं स्वस्याज्ञानं पलायितं क्वापि ॥ ६० ॥
धन्योहं धन्योहं कर्तव्यं मे नविद्यते किं चित् ॥
धन्योहंधन्योहं प्राप्तव्यं सर्वमद्य संपन्नम् ॥ ६१ ॥
धन्योहं धन्योहं तृप्तेर्मे कोपमा भवेल्लोके ॥
धन्योहं धन्योहं धन्यो धन्यः पुनः पुनर्धन्यः ॥ ६२ ॥
अहो पुण्यमहो पुण्यं फलितं फलितं दृढम् ॥
अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥ ६३ ॥
अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ॥
अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् ॥ ६४ ॥

अवशिष्टं कृतकृत्यत्वं प्राप्तप्राप्यत्वमित्युभयं तृप्तिदीपे द्रष्टव्यमित्याह । तएवेति ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ॥ ६३ ॥ ६४ ॥

ब्रह्मानंदाभिधे ग्रंथे चतुर्थोध्याय ईरितः ॥
विद्यानंदस्तदुत्पत्तिपर्यंतोभ्यास इष्यताम् ॥ ६५ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविद्यारण्यस्वामिविरचितायां पंचदश्यां ब्रह्मानंदे विद्यानंदो नामचतुर्थोऽध्यायः समाप्तः ॥४

इममध्यायार्थमुपसंहरति । ब्रह्मानंदाभिध इति ॥६५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिकिंकरेण रामकृष्णाख्यविदुषाविरचिता ब्रह्मानंदे विद्यानंदव्याख्या समाप्ता ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

॥ श्रीः ॥

# पंचदशी।

## ब्रह्मानन्दे विषयानन्दः प्रकरणम् १५

श्रीगणेशाय नमः।

अथात्र विषयानंदो ब्रह्मानंदांशरूपभाक् ॥
निरूप्यते द्वारभूतस्तदंशत्वं श्रुतिर्जगौ ॥ १ ॥

श्रीगणेशाय नमः ॥ पंचमाध्यायस्य प्रतिपाद्यमर्थमाह । अथेति। ननु विषयानंदस्य लौकिकत्वात् मोक्षशास्त्रे निरूपणमनुपपन्नमित्याशंक्य तस्य लौकिकप्रसिद्धत्वेपि ब्रह्मानंदैकदेशत्वेन ब्रह्मज्ञानोपयोगित्वाद्युक्तमित्याह । द्वारेति। ब्रह्मानंदैकदेशत्वे किं प्रमाणमित्याशंक्याह । तदंशत्वमिति ॥ १ ॥

एषोस्य परमानंदो योऽखंडैकरसात्मकः ॥
अन्यानि भूतान्येतस्य मात्रामेवोपभुंजते ॥ २ ॥

तामेव श्रुतिमर्थतः पठति । एष इति ॥ २ ॥

शांता घोरास्तथा मूढा मनसो वृत्तयस्त्रिधा ॥
वैराग्यं क्षांतिरौदार्यमित्याद्याः शांतवृत्तयः ॥ ३ ॥
तृष्णा स्नेहो रागलोभावित्याद्या घोरवृत्तयः ॥
संमोहो भयमित्याद्याः कथिता मूढवृत्तयः ॥ ४ ॥

इदानीं विषयानंदस्य ब्रह्मानंदलेशत्वप्रदर्शनाय तदुपाधिभूतांतःकरणवृत्तीर्विभजते। शांता इति।शांताः सात्त्विक्यो वृत्तयः घोराः राजस्यः मूढास्तामस्यः ता एव शांतादिवृत्तीर्दर्शयति । वैराग्यमित्यादिना ॥ ३ ॥ ४ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वृत्तिष्वेतासु सर्वासु ब्रह्मणश्चित्स्वभावता ॥
प्रतिबिंबति शांतासु सुखं च प्रतिबिंबति ॥ ५ ॥

उदाहृतासु विविधास्वपि वृत्तिषु ब्रह्मणश्चिद्रूपत्वं भातीत्याह । वृत्तिष्विति । शांतासु विशेषमाह । शांतास्विति । चशब्दोनुक्तद्वय-समुच्चयार्थः ॥ ५ ॥

रूपं रूपं बभूवासौ प्रतिरूप इति श्रुतिः ॥
उपमा सूर्यकेत्यादि सूत्रयामास सूत्रकृत् ॥ ६ ॥

उक्तार्थे श्रुतिवाक्यमर्थतः पठति । रूपमिति । तत्रैव व्याससूत्रै-कदेशं पठति । 'उपमेति । अत एव चे'ति सूत्रस्य पूर्वभागः ॥ ६ ॥

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ॥
एकधा बहुधा चैव दृश्यते जलचंद्रवत् ॥ ७ ॥

स्वरूपेणैकस्योपाधिसंपर्कान्नानात्वे श्रुतिं पठति।एक एवेति॥७

जले प्रविष्टश्चंद्रोयमस्पष्टः कलुषे जले ॥
विस्पष्टो निर्मले तद्वद्द्वेधा ब्रह्मापि वृत्तिषु ॥ ८ ॥

ननु निरवयवस्य ब्रह्मणः क्वचिच्चिन्मात्रभानमितरत्र चिदानं-दभानमित्येवं विभागकरणमनुपपन्नमित्याशंक्य चंद्रदृष्टांतेन प-रिहरति । जले प्रविष्ट इति । उक्तमर्थं दार्ष्टांतिके योजयति । तद्वदिति ॥ ८ ॥

घोरमूढासु मालिन्यात्सुखांशश्च तिरोहितः ॥
ईषन्नैर्मल्यतस्तत्र चिदंशप्रतिबिंबनम् ॥ ९ ॥

तदेवोपपादयति । घोरेति ॥ ९ ॥

यद्वाऽपि निर्मले नीरे वह्नेरौष्ण्यस्य संक्रमः ॥
न प्रकाशस्य तद्वत्स्याच्चिन्मात्रोद्भूतिरेव च ॥ १० ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ननु चंद्रोपाधेरुदकस्य द्वैविध्यादंशभानमुपपन्नं प्रकृते तूपाधिभूतस्यांतःकरणस्यैकत्वादेकांशभानमनुपपन्नमित्याशंक्य दृष्टांतांतरमाह। यद्वापीति ॥ १० ॥

काष्ठे त्वौष्ण्यप्रकाशौ द्वावुद्भवं गच्छतो यथा ॥
शांतासु सुखचैतन्ये तथैवोद्भूतिमाप्नुतः ॥ ११ ॥

इदानीं शांतासु वृत्तिषु चिदानंदयोः प्रतीतौ दृष्टांतांतरमाह। काष्ठे त्विति ॥ ११ ॥

वस्तुस्वभावमाश्रित्य व्यवस्था तूभयोः समा ॥
अनुभूत्यनुसारेण कल्प्यते हि नियामकम् ॥ १२ ॥

नन्वेवं व्यवस्था कुतः कृतेत्याशंक्याह। वस्त्विवति। तत्र किं नियामकमित्याशंक्याह। अनुभूतीति ॥ १२ ॥

न घोरासु न मूढासु सुखानुभव ईक्ष्यते ॥
शांतास्वपि क्वचित्कश्चित्सुखातिशय ईक्ष्यताम् ॥ १३॥

अनुभूतिमेव दर्शयति। न घोरास्विति। शांतास्वप्यानंदप्रकाशोस्ति सोपि क्व चित्कश्चित्सुखातिशयो भवतीत्याह। शांतास्विति ॥ १३ ॥

गृहक्षेत्रादिविषये यदा कामो भवेत्तदा ॥
राजसस्यास्य कामस्य घोरत्वात्तत्र नो सुखम् ॥ १४॥

पूर्वोक्तघोरमूढवृत्तिषु सुखाभावमेवाभिनीय दर्शयति। ग्रहक्षेत्रेति ॥ १४ ॥

सिध्येन्न वेत्यस्ति दुःखमसिद्धौ तद्विवर्धते ॥
प्रतिबंधे भवेत् क्रोधो द्वेषो वा प्रतिकूलतः ॥ १५ ॥

सुखासिद्धौ दुःखं वर्धते सुखस्य प्रतिबंधे तु क्रोधो भवति सु-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वाभावे कारणांतरमाह। द्वेषो वेति। तत्र प्रतिकूलदुःखस्य सत्त्वादित्यर्थः ॥ १५ ॥

अशक्यश्चेत्प्रतीकारो विषादः स्यात्स तामसः ॥
क्रोधादिषु महद्दुःखं सुखशंकापि दूरतः ॥ १६ ॥
काम्यलाभे हर्षवृत्तिः शांता तत्र महत्सुखम् ॥
भोगे महत्तरं लाभप्रसक्तावीषदेव हि ॥ १७ ॥
महत्तमं विरक्तौ तु विद्यानंदे तदीरितम् ॥
एवं क्षांतौ तथौदार्ये क्रोधलोभनिवारणात् ॥ १८ ॥

परिहारस्याशक्यत्वे विषादो भवति तस्यापि तामसत्वान्न तत्र सुखमित्याह। अशक्य इति। क्रोधादिष्वित्यादयः स्पष्टार्थाः॥ १६॥ ॥ १७ ॥ १८ ॥

यद्यत्सुखं भवेत्तत्तद्ब्रह्मैव प्रतिबिंबनात् ॥
वृत्तिष्वंतर्मुखास्वस्य निर्विघ्नं प्रतिबिंबनम् ॥ १९ ॥

एवं क्षांत्यादीनां सिद्धमित्याह। वृत्तिष्विति ॥ १९ ॥

सत्ता चितिः सुखं चेति स्वभावा ब्रह्मणस्त्रयः ॥
मृच्छिलादिषु सत्तैव व्यज्यते नेतरद्वयम् ॥ २० ॥

इदानीं सर्वत्र ब्रह्मस्वरूपानुभूतिप्रदर्शनाय तत्स्वरूपं स्मारयति। सत्तेति। मृच्छिलादिषु सन्मात्रमित्यर्थः ॥ २० ॥

सत्ता चितिर्द्वयं व्यक्तं धीवृत्त्योर्घोरमूढयोः ॥
शांतवृत्तौ त्रयं व्यक्तं मिश्रं ब्रह्मेत्थमीरितम् ॥ २१ ॥

घोरमूढयोर्द्वयोः सत्ताचिती द्वे शांतवृत्तौ सच्चिदानंदाः त्रयोऽपि व्यक्ताः एवं सप्रपंचं ब्रह्माभिहितमित्याह। मिश्रमिति ॥ २१ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अमिश्रं ज्ञानयोगाभ्यां तौ च पूर्वमुदीरितौ ॥
आद्येऽध्याये योगचिंता ज्ञानमध्याययोर्द्वयोः ॥ २२ ॥

अमिश्रं कुतो ज्ञायत इत्याशंक्याह। अमिश्रमिति। तौ च ज्ञानयोगौ पूर्वमेवोक्तावित्यर्थः। कुत्रोक्तावित्याशंक्य योगः प्रथमाध्याये उक्त इत्याह। आद्य इति। समनंतराध्याययोर्ज्ञानमुक्तमित्याह। ज्ञानमिति ॥ २२ ॥

असत्ता जाड्यदुःखे द्वे मायारूपं त्रयं त्विदम् ॥
असत्ता नरशृंगादौ जाड्यं काष्ठशिलादिषु ॥ २३ ॥

ननु सच्चिदानंदानां ब्रह्मरूपत्वे मायायाः किं रूपमित्याशंक्याह। असत्तेति। नृशृंगादावसत्त्वं मृच्छिलादिषु जाड्यमिति विवेकः ॥ २३ ॥

घोरमूढधियोर्दुःखमेवं माया विजृंभिता ॥
शांतादिबुद्धिवृत्त्यैक्यान्मिश्रं ब्रह्मेति कीर्तितम् ॥ २४ ॥

दुःखं कुत्रेत्याशंक्याह। घोरमूढेति। एवं सर्वत्र माया प्रतिभासत इत्याह। एवमिति। शांतादिषु वृत्तिषु ब्रह्मणो मिश्रत्वे किं कारणमित्यत आह। शांतादीति ॥ २४ ॥

एवं स्थितेऽत्र यो ब्रह्म ध्यातुमिच्छेत्पुमानसौ ॥
नृशृंगादिमुपेक्षेत शिष्टं ध्यायेद्यथायथम् ॥ २५ ॥

एतदभिधानं किमर्थमित्याशंक्य ब्रह्मध्यानार्थमित्याह। एवमिति। नृशृंगादिमुपेक्ष्यान्यत्र ब्रह्मध्यानं कर्तव्यमित्याह। नृशृंगादिमिति ॥ २५ ॥

शिलादौ नामरूपे द्वे त्यक्त्वा सन्मात्रचिंतनम् ॥
त्यक्त्वा दुःखं घोरमूढधियोः सच्चिद्विचिंतनम् ॥ २६ ॥


CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्यत्रेत्युक्तं कुत्र कथं ध्येयमित्यत आ[illegible]। [illegible] किं॰ [illegible]
मूढबुद्धिषु दुःखं परित्यज्य सच्चिद्रूपयोर्[illegible] कर्तव्यमित्याह । त्य-
क्त्वेति ॥ २६ ॥

शांतासु सच्चिदानंदांस्त्रीनप्येवं विचिंतयेत् ॥
कनिष्ठमध्यमोत्कृष्टास्तिस्रश्चिंताः क्रमादिमाः ॥२७ ॥

सात्विकवृत्तिषु सच्चिदानंदास्त्रयोपि ध्येया इत्याह।शांतास्विति।
एषां ध्यानानां किं साम्यं नेत्याह । कनिष्ठेति ॥ २७ ॥

मंदस्य व्यवहारेपि मिश्रब्रह्मणि चिंतनम् ॥
उत्कृष्टं वक्तुमेवात्र विषयानंद ईरितः ॥ २८ ॥

इदानीं निर्गुणब्रह्मध्यानेऽनधिकारिणोऽनुग्रहाय मिश्रब्रह्मध्या-
नेऽधिकार इत्यभिप्रायेणाह । मंदस्येति ॥ २८ ॥

औदासीन्ये तु धीवृत्तेः शैथिल्यादुत्तमोत्तमम् ॥
चिंतनं वासनानंदे ध्यानमुक्तं चतुर्विधम् ॥ २९ ॥

एवं सवृत्तिकं ध्यानत्रयमुक्त्वाऽवृत्तिकं ध्यानमाह । औदासी-
न्ये त्विति। एभ्यो ध्यानेभ्योऽधिकमित्यर्थः । उक्तं निगमयति । ध्या-
नमिति ॥ २९ ॥

न ध्यानं ज्ञानयोगाभ्यां ब्रह्मविद्यैव सा खलु ॥
ध्यानेनैकाग्र्यमापन्ने चित्ते विद्या स्थिरीभवेत् ॥ ३० ॥

अयं ध्यानावांतरभेदः किं नेत्याह । न ध्यानमिति। तर्हि किमे-
तदित्याशंक्याह । ब्रह्मविद्येति । इयं ब्रह्मविद्या कथमुत्पन्नेत्याशं-
क्याह । ध्यानेनेति ॥ ३० ॥

विद्यायां सच्चिदानंदा अखंडैकरसात्मताम् ॥
प्राप्य भांति न भेदेन भेदकोपाधिवर्जनात् ॥ ३१ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



...हेतुमाह। विद्यायामिति ॥ ३१ ॥

शांता घोराः शिलाद्याश्च भेदकोपाधयो मताः ॥
योगाद्विवेकतो वैषामुपाधीनामपाकृतिः ॥ ३२ ॥

भेदकोपाधिवर्जनादित्युक्तं तानेव भेदकोपाधीनाह। शांता इति। एतेषां परिहारः केनोपायेनेत्याशंक्याह। योगादिति ॥ ३२ ॥

निरुपाधिब्रह्मतत्त्वे भासमाने स्वयंप्रभे ॥
अद्वैते त्रिपुटी नास्ति भूमानंदोत उच्यते ॥ ३३ ॥

फलितमाह। निरुपाधीति। त्रिपुटीभानाभावाद् भूमानंद इत्युच्यत इत्यर्थः ॥ ३३ ॥

ब्रह्मानंदाभिधे ग्रंथे पंचमोध्याय ईरितः ॥
विषयानंद एतेन द्वारेणांतः प्रविश्यताम् ॥ ३४ ॥

ग्रंथमुपसंहरति। ब्रह्मानंदेति। स्पष्टत्वान्न व्याख्यायते ॥ ३४ ॥

प्रीयाद्धरिर्हरोनेन ब्रह्मानंदेन सर्वदा ॥
पायाच्च प्राणिनः सर्वान्स्वाश्रितांश्छुद्धमानसान् ॥ ३५ ॥

प्रीयादिति ॥ ३५ ॥

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविद्यारण्यमुनिविरचितायां पंचदश्यांब्रह्मानंदे विषयानंदः समाप्तः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण श्रीरामकृष्णाख्यविदुषा विरचिता ब्रह्मानंदांतर्गतविषयानंदव्याख्या समाप्ता ॥ १५ ॥

समाप्ता पंचदशी

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# ❀ वेदान्तपुस्तकों [illegible] सूचीपत्र ❀

| | कि० रु० | आ० |
|---|---|---|
| शारीरकब्रह्मसूत्रभाष्य अति[illegible] .... | १० | |
| योगवासिष्ठ संस्कृत .... .... .... | २५ | |
| दशोपनिषदमूल अक्षरबडा .... .... .... | ३ | |
| गीता श्रीधरीटीकासहित .... .... .... | १ | ४ |
| गीता श्रीमत्चिद्घनानन्दस्वामिकृत .... .... | ८ | |
| भाषान्यायप्रकाश चिद्घनानन्दस्वामिकृत .... | ८ | |
| आत्मपुराणभाषा चिद्घनानन्दस्वामिकृत .... | १३ | |
| पंचदशीभाषा अतिउत्तम आत्मस्वरूपजीकृत.... | ४ | |
| वासिष्ठसारभाषा अतिउत्तम .... .... .... | ३ | |

ऊपरलिखेला सबपुस्तक नीचेलिखेले ठिकाणेपर मिलेंगे

पुस्तक मिलनेका ठिकाणा.

**गंगाविष्णु श्रीकृष्णदास.**

श्रीवेंकटेश्वर छापखाना.

**(मुंबई.)**

और विशेष पुस्तकका नाम और भाव तपास करना होय तो आधा आनेका टिकट भेजनेसे सूचीपत्र भेजदिया जायगा और चिट्ठी भेजगा-तो उसका जबाबभी मिलसकेंगे.

43,622

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

'No?'

'No. My name is not Heath... student at Vassar. Claire R... Philosophy major. History of Western Thought and all that. I have a paper due January. On Western religion. All the other kids in the course will hand in speculative papers. But I want to know. Professor Grebanier said if anyone finds out for sure, they're a cinch to pass the course. And my dad's promised me a Mercedes if I get straight As.'

I opened a deck of Luckies and a pack of gum and had one of each. Her story was beginning to interest me. Spoiled coed. High IQ and a body I wanted to know better.

'What does God look like?'

'I've never seen him.'

'Well, how do you know He exists?'

'That's for you to find out.'

'Oh, great. Then you don't know what he looks like? Or where to begin looking?'

'No. Not really. Although I suspect he's everywhere. In the air, in every flower, in you and I—and in this chair.'

'Uh huh.' So she was a pantheist. I made a mental note of it and said I'd give her case a try—for a hundred bucks a day, expenses and a dinner date. She smiled and okayed the deal. We rode down in the elevator together. Outside it was getting dark. Maybe God did exist and maybe He didn't, but somewhere in that city there were sure a lot of guys who were going to try and keep me from finding out.

My first lead was Rabbi Itzhak Wiseman, a local cleric who owed me a favour for finding out who was rubbing pork on his hat. I knew something was wrong when I spoke to him because he was scared. Real scared.

'Of course there's a you-know-what, but I'm not

# FICTION/WOODY ALLEN

## Woody Allen, America's most famous actor and film-maker, is also well known as a humorist.

## Here is an unusual short story by him.

even allowed to say His name or He'll strike me dead, which I could never understand why someone is so touchy about having his name said.'

'You ever see Him?'

'Me? Are you kidding? I'm lucky if I get to see my grandchildren.'

'Then how do you know He exists?'

'How do I know? What kind of question is that? Could I get a suit like this for 14 dollars if there was no one up there? Here, feel a gabardine—how can you doubt?'

'You got nothing more to go on?'

'Hey—what's the Old Testament? Chopped liver? How do you think Moses got the Israelites out of Egypt? With a smile and a tap dance? Believe me, you don't part the Red Sea with some gismo from Korvette's. It takes power.'

'So he's tough, eh?'

'Yes. Very tough. You'd think with all that success he'd be a lot sweeter.'

'How come you know so much?'

'Because we're the chosen people. He takes best care of us of all His children, which I'd also like to someday discuss with Him.'

'What do you pay Him for being chosen?'

'Don't ask.'

So that's how it was. The Jews were into God for a lot. It was the old protection racket. Take care of them in return for a price. And from the way Rabbi Wiseman was talking. He soaked them plenty.

I got into a cab and made it over to Danny's Billiards on Tenth Avenue. The manager was a slimy guy I didn't like.

'Chicago Phil here?'

'Who wants to know?'

I grabbed him by the lapels and took some skin at the same time.

'What, punk?'

'In the back,' he said, with a change of attitude.

Chicago Phil. Forger, bank robber, strong-arm man and avowed atheist.

'The guy never existed, Kaiser. This is the straight dope. It's a big hype. There's no Mr Big. It's a syndicate. Mostly Sicilian. It's international. But there is no actual head. Except maybe the Pope.'

'I want to meet the Pope.'

'It can be arranged,' he said, winking.

'Does the name Claire Rosensweig mean anything to you?'

'No.'

'Heather Butkiss?'

'Oh, wait a minute. Sure. She's that peroxide



CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

...would ... there'd be no ... take the ... decision, ... by a plebiscite or, ... permit, by a show of hands. He could go round himself, with, say Sheikh Abdullah or someone else, and they could *put up their hands* and you could take photo-*graphs and see which* way it went.

*It would* be something that would be convincing. And if he went to Pakistan, I had the assurance of Mr Jinnah, to whom I'd spoken about this, that he would be welcomed with open arms and given an honoured place within the new Pakistan. And he'd be there for good.

If he went to India he was assured of the protection of India and he would be treated with honour there, also. The only thing that was fatal to him was to procrastinate and not make up his mind, because that would mean that he would then be a non-viable, landlocked state whose two neighbours were at each others' throats, and eventually he would be the battlefield...

☐ *How did you organise the intervention of Indian troops in Kashmir?*

I was chairman of the defence committee. I summoned the chiefs of staff. Having got the agreement of Nehru and of any other ministers who were present, I got them round instantly. I told them V P Menon had come back with the instrument of accession. He came back with a request for intervention. I said we had to get there, because if we didn't I would be held responsible for the slaughter which will undoubtedly occur to the British retired colonels there and their wives. But basically, we wanted to stop further massacres along the route, and in Srinagar.

So I told them that I wanted them to go up there. But without using the British RAF or British troops; entirely with Indian aeroplanes, civil or military, and Indian troops. What I did was to put out a flash call for every single ... he made ... couldn't see them, he could ...onal ... him to have a plebiscite to decide w... I urged Kashmir wanted to go. He immediately agreed, with the proviso we mentioned earlier.

It showed he was willing to put the thing to the test because the population was 80 per cent Muslim. He also knew in those days that with Sheikh Abdullah out, they'd win. The reason he wanted the raiders out, of course, was his certain knowledge that while they were there they'd influence the plebiscite. He was perfectly reasonable while praying and hoping Kashmir would remain in India.

☐ *What was Jinnah's reaction when he learned you were sending Indian troops into Kashmir?*

He exploded with rage. He called General Messervy. (Lt-Gen F W Messervy, GOC-in-C, Northern Command, India, 1946-47) and told him, "This is going too far, we shall have to declare war. We'll have to invade Kashmir and throw the Indians out."

Messervy said, "You realise this will mean a real war?"

"Yes."

"I must warn you that this will entail severe repercussions and I must report this to the Supreme Commander;" Messervy said. He then called Auchinleck who said "You will not take Jinnah's orders to advance into Kahsmir until he appreciates that the moment he invades, every British officer now serving in the Pakistan army must be stood down before the order is given."

Auchinleck reported this to me. It stopped the war in its tracks. Unlike the Indian army which had much more intelligent officers and could perhaps carry on, the Pakistan army couldn't carry on without British officers. So when he said they'd have to be stood down before the order was given, that stopped them. Otherwise Jinnah ... what happened was ... *...resign, for the wrong reasons. He felt he was a realist, a bit of a reactionary, but a realist, a nationalist,* and Nehru was definitely a theoretic... *...was a Fabian, with* fine ideas that he wasn't in a position to carry out. ... he was wrecking things, was preventing business from going on. He was preventing stability. He thought this was nonsense and he couldn't get him to stop it.

Gandhi told me about all this. They've reached a split, he said Patel wanted to resign because he couldn't go on with Nehru. What do you think? he asked.

I said, "Well, Patel can't resign. Nehru is the great ideological leader of the people, but he's a visionary, he's not very practical. Patel is eminently practical. He's in fact, running the country; you can't let him go or the country would disintegrate. You can't let Nehru go, either, because then the ultimate image would disappear. They're both needed and they've got to learn to work together."

"I agree," he said, "they must be together." He stopped Patel from resigning, but asked me to bring them together which I did at the time of his death.

☐ *There were, however, rumours of a plot to assassinate Gandhi. Did they come mainly from Muslim sources?*

No. I felt that the people most likely to kill him would be the extremist Hindus, since they were most against him. Because he was, in fact, protecting the Muslims. The Muslims would be the last people in their senses to kill him, and they were terrified when he was killed. He was their great protector. ■

*Excerpted from* Mountbatten and Independent India, August 16, 1947 – June 18, 1948 *by Larry Collins and Dominique Lapierre, Vikas Publishing House Pvt Ltd, 1984, Rs 125*



Entered ... Signature with Date

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

NWFP, at Peshawar

Excellency and His Highness agree that Kashmir and Jammu would accede to one future dominion or the other before the transfer of power on the 15th of August." It was noted that Kashmir acceding to Pakistan appeared the wisest course. If on the other hand, they decided to accede to India, the Indians would send ... or two infantry divisio... ...t int... Pakis-tan might no...
would ... there'd be no ... take the persc... decision, h... plebiscite or, ... ...ther by a ...ermit, by a show of

aeroplane of all local Indian airways to return to the most convenient place, to disembark their passengers and fly immediately to Delhi.

I wanted the right sort of troops to go up there. I knew there were one or two Gurkha battalions here so I said, "Use them to begin with. I personally think the others you can use are Sikhs. The Sikhs are not involved, as between the Muslim and Hindu populations. (There was no Sikh population in Jammu) And send off the appropriate senior officers to Palam airfield. The necessary equipment, decide what it is, the ammunition. Have a continuing supply going on. If we fail to reach the airfield in Srinagar before the tribesmen (some of this may not have been recorded before) get down to the edge of the airfield. We must have a parachute battalion ready to drop, and they'll be dropped at the most convenient point, where the tribesmen haven't yet got to—there are plenty up the vale of Srinagar, up the Jumna—to do that. They'll go down with their superior weapons, machine guns and mortars. They must drive them off and reopen the airfield and get the troops in. Off you go, full speed!" I made them run. They all went off at high speed, and did that.

☐ *Do you remember the particular feelings Nehru had about the Kashmir issue? Did they complicate things?*

I do, indeed. From the beginning, he confessed he was deeply involved in Kashmir. He was a Kashmiri brahmin, it was his home. But he was a man of the highest integrity and intellect. He would not have dreamt of trying to coerce Kashmir into India on account of his emotional attachment. But once they had, in fact, thrown in their lot with India, he ... not let them down." That was his e... ...he made ... couldn't see them, he could ...onal him to have a plebiscite to decide w... I urged

would have given them the orders to go in.

☐ *You have been accused of having got too involved in the Kashmir operation. What is your own feeling about it?*

I have indeed been accused of getting too involved in doing this. All right, so I made a mistake. But look, I'm not a chap who tried to protect himself. I knew none of these people had any idea how to run a defence committee and I knew all about it. It would be very cowardly to do it behind a screen. Nehru hadn't a clue how to do it. I also knew I could keep things straight. It's true I stuck out my neck, but I did it with my eyes open and I think I limited their excesses. Whatever they did wrong, they did it less wrong because I was there.

When it was decided to send troops, I said "You cannot do it until Kashmir is a part of India. You can only do it, therefore, if he accedes. If he doesn't I shall have to advise you, *you are not entitled to send troops in.* Second, remember nothing whatever was prepared for this operation. We believe the tribesmen were coming in trucks supplied by the Pakistan government, therefore they were involved, their army may be involved, and this was not an affair to be taken lightly. It's touch and go if we can seize the airfield and hold, unless we start operations right now...

They decided they would and said, "How?" I said, "Leave it to me." This is how I got the three chiefs and ordered every airplane mobilised in India, RIAF, commercial, private. Bring them all to Delhi, no arguments. Second, ready your troops, even the Delhi garrison, if you have to.

☐ *One of the big problems that the first indepen-... government faced was the constant ... Nehru and Patel. How did ... this problem?*

What happened was ... resign, for the wrong reasons. He felt he was realist, a bit of a reactionary, but a realist, nationalist, and Nehru was definitely a theoretic...

CC-0. Gurukul Kangri Collection, Haridwar